# अथ दिक्पालभुजङ्गम्

शचीशं मरुत्वन्तमाखण्डलं तं
दिवीशं सहस्राक्षमभ्रेभ्रमन्तम् ।
सुधर्मेशमैरावते भ्राजमानं
नमामीशमिन्द्रं जगत्कारणाद्रिम् ॥

द्वितुण्डं त्रिपादं निजं वैदिकानां
ज्वलन्तं शुचिं सप्तजिह्वं च वह्निम् ।
वरं वीतिहोत्रं सुरं शान्तरूपं
नमाम्यग्निमर्च्यं जगद्धेतुभूतम् ॥

हरिं धर्मराजं विवस्वत्सुपुत्रं
परं पैतृकं देवमन्तङ्करं वै ।
विधिं वाहने माहिषे संप्रयान्तं
नमामीश्वरं श्राद्धदेवं विभुं वै ॥

सुरं जारकं सर्वरक्षोधिदेवं
वरं खड्गहस्तं विरूपाक्षतातम् ।
विभुं याम्यपश्चाद्दिशो मध्यगं तं
नमामीशमीशं नृवाहं च शूरम् ॥

सुरेड्यं सुरूपं सुरैःपूज्यमानं
भगं नक्रगं जम्बुकं यादवेशम् ।
परं पश्चिमेशं कपं पाशयुक्तं
नमाम्यप्पतिं चाम्बुदातारमीशम् ॥

समीरं जगत्प्राणमाकाशजातं
विहङ्गं नभस्वन्तमार्यं परोक्षम् ।

अणुं चावकं पञ्चरूपात्मकं तं
नमाम्याशुगं स्पर्शनं वीररूपम् ॥

क्षपेशं शशांकं सुधांशुं हिमांशुं
पपिं चन्द्रदेवं विधुं तोयरूपम् ।
अजं पक्षजं रोहिणीनाथमर्कं
नमाम्यब्जमत्र्यक्षिसंभूतरत्नम् ॥

सुरं चामरं सर्वविज्ञं सुधीरं
निजं निर्विकल्पाख्यमव्यक्तरूपम् ।
धवं सर्वदिग्वासमादिस्वरूपं
नमामीशमीशानरूपं सुदैवम् ॥